# श्रीहनुमदष्टादशाक्षरमन्त्रजपविधानम्

ॐ नमो भगवते आञ्जनेयाय महाबलाय स्वाहा ॥

अस्य मन्त्रस्य ईश्वर ऋषिः अनुष्टुप् छन्दः । हनुमान् देवता ।
हुं बीजम् । स्वाहा शक्तिः । सर्वेष्टसिद्धये जपे विनियोगः ।
ध्यानम्
ॐ दहनतप्तसुवर्णसमप्रभं भयहरं हृदये विहिताञ्जलिम् ।
श्रवणकुण्डलशोभिमुखाम्बुजं नमत वानरराजमिहाद्भुतम् ॥

षडङ्गन्यासवन्दनम्-
ॐ आञ्जनेयाय नमः । ॐ रुद्रमूर्तये नमः ।
ॐ वायुपुत्राय नमः । ॐ अग्निगर्भाय नमः । ॐ रामदूताय नमः ।
ॐ ब्रह्मास्त्रनिवारकाय ममः ।
दिशावन्दनम्-
ॐ रामभक्ताय नमः । ॐ महातेजसे नमः । ॐ कपिराजाय नमः ।
ॐ महाबलाय नमः । ॐ द्रोणाद्रिहारकाय नमः ।
ॐ मेरुपीठार्चनकारकाय नमः । ॐ दक्षिणाशाभास्कराय नमः ।
ॐ सर्वविघ्ननिवारकाय नमः ।
परिवारवन्दनम्-
ॐ सुग्रीवाय नमः । ॐ अङ्गदाय नमः । ॐ नीलाय नमः ।
ॐ जाम्बवते नमः । ॐ नलाय नमः । ॐ सुषेणाय नमः ।
ॐ द्विविदाय नमः । ॐ मैन्दाय नमः ।

यन्त्रस्थापना ॥

संविन्मय प्रभो देव परामृतरसप्रिय ।

अभीष्टं मम देहि त्वं शरणागतवत्सल ॥

विश्वलोचनचक्रपूजा

ॐ नमो भगवते हनुमते सर्वभूतात्मने हनुमते सर्वात्मसंयोग-
पद्मपीठात्मने नमः ॥

काम्यमन्त्रयोगफलानि जपित्वा क्षुद्ररोगेभ्यो मुच्यते दिवसत्रयात् ।
भूतप्रेतपिशाचादिनाशाय च समाचरेत् ।
महारोगनिवृत्त्यै च मुच्यते दिवसत्रयात् ।
एकाशनोऽयुतं नित्यं जपन्ध्यायन्कपीश्वरम् ।
राक्षसौघं विनिघ्नन्तं अचिराज्जयति द्विषः ॥

लङ्कां दहन्तं निध्यायन्नयुतं प्रजपेन्मनुम् ।
शत्रूणां प्रदहेद्ग्रामानचिरादेव साधकः ॥

यः कपीशं सदा गेहे पूजयेज्जपतत्परः ।
आयुर्लक्ष्म्यौ प्रवर्धेते तस्य नश्यन्त्युपद्रवाः ॥

शार्दूलतस्करादिभ्यो रक्षेन्मनुरयं स्मृतः ।
प्रस्वापकाले चौरेभ्यो दुष्टस्वप्नादपि ध्रुवम् ॥